# राजराजेश्वरीस्तवः

त्यागराजविरचितः

या त्रैलोक्यकुटुम्बिका वरसुधाधाराभिसंतर्पिणी
भूम्यादीन्द्रियचित्तचेतनपरा संविन्मयी शाश्वती ।
ब्रह्मेन्द्राच्युतवन्दितेशमहिषी विज्ञानदात्री सतां
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ १॥

यां विद्येति वदन्ति शुद्धमतयो वाचां परां देवतां
षट्चक्रान्तनिवासिनीं कुलपथप्रोत्साहसंवर्धिनीम् ।
श्रीचक्राङ्कितरूपिणीं सुरमणेर्वामाङ्कसंशोभिनीं
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ २॥

या सर्वेश्वरनायिकेति ललितेत्यानन्दसीमेश्वरी-
त्यम्बेति त्रिपुरेश्वरीति वचसां वाग्वादिनीत्यन्नदा ।
इत्येवं प्रवदन्ति साधुमतयः स्वानन्दबोधोज्ज्वलाः
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ ३॥

या प्रातः शिखिमण्डले मुनिजनैर्गौरी समाराध्यते
या मध्ये दिवसस्य भानुरुचिरा चण्डांशुमध्ये परम् ।
या सायं शशिरूपिणी हिमरुचेर्मध्ये त्रिसंध्यात्मिका
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ ४॥

या मूलोत्थितनादसंततिलवैः संस्तूयते योगिभिः
या पूर्णेन्दुकलामृतैः कुलपथे संसिच्यते संततम् ।
या बन्धत्रयकुम्भितोन्मनिपथे सिद्ध्यष्टकेनेड्यते
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ ५॥

या मूकस्य कवित्ववर्षणसुधाकादम्बिनी श्रीकरी
या लक्ष्मीतनयस्य जीवनकरी संजीविनीविद्यया ।
या द्रोणीपुरनायिका द्विजशिशोः स्तन्यप्रदात्री मुदा
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ ६॥

या विश्वप्रभवादिकार्यजननी ब्रह्मादिमूर्त्यात्मना
या चन्द्रार्कशिखिप्रभासनकरी स्वात्मप्रभासत्तया ।
या सत्त्वादिगुणत्रयेषु समतासंवित्प्रदात्री सतां
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ ७॥

या क्षित्यन्तशिवादितत्त्वविलसत्स्फूर्तिस्वरूपा परं
या ब्रह्माण्दकटाहभारनिवहन्मण्डूकविश्वम्भरी ।
या विश्वं निखिलं चराचरमयं व्याप्य स्थिता संततं
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ ८॥

या वर्गाष्टकवर्णपञ्जरशुकी विद्याक्षरालापिनी
नित्यानन्दपयोऽनुमोदनकरी श्यामा मनोहारिणी ।
सत्यानन्दचिदीश्वरप्रणयिनी स्वर्गापवर्गप्रदा
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ ९॥

या श्रुत्यन्तसुशुक्तिसम्पुटमहामुक्ताफलं सात्त्विकं
सच्चित्सौख्यपयोदवृष्टिफलितं सर्वात्मना सुन्दरम् ।
निर्मूल्यं निखिलार्थदं निरुपमाकारं भवाह्लाददं
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ १०॥

या नित्याव्रतमण्डलस्तुतपदा नित्यार्चनातत्परा
नित्यानित्यविमर्शिनी कुलगुरोर्वावयप्रकाशात्मिका ।
कृत्याकृत्यमतिप्रभेदशमनी कात्स्नर्यात्मलाभप्रदा
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ ११॥

यामुद्दिश्य यजन्ति शुद्धमतयो नित्यं पराग्नौ स्रुचा
मत्या प्राणघृतप्लुतेन्द्रियचरुद्रव्यैः समन्त्राक्षरैः ।
यत्पादाम्बुजभक्तिदार्ढ्यसुरसप्राप्त्यै बुधाः संततं
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ १२॥

या संविन्मकरन्दपुष्पलतिकास्वानन्ददेशोत्थिता
सत्संतानसुवेष्टनातिरुचिरा श्रेयःफलं तन्वती ।
निर्धूताखिलवृत्तिभक्तधिषणाभृङ्गाङ्गनासेविता
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ १३॥

यामाराध्य मुनिर्भवाब्धिमतरत् क्लेशोर्मिजालावृतं
यां ध्यात्वा न निवर्तते शिवपदानन्दाब्धिमग्नः परम् ।
यां स्मृत्वा स्वपदैकबोधमयते स्थूलेऽपि देहे जनः
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ १४॥

यापाषाङ्कुशचापसायककरा चन्द्रार्धचूडालसत्
काञ्चीदामविभूषिता स्मितमुखी मन्दारमालाधरा ।
नीलेन्दीवरलोचना शुभकरी त्यागाधिराजेश्वरी

तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ १५॥

या भक्तेषु ददाति संततसुखं वाणीं च लक्ष्मीं तथा
सौन्दर्यं निगमागमार्थकवितां सत्पुत्रसम्पत्सुखम् ।
सत्सङ्गं सुकलत्रतां सुविनयं सयुज्यमुक्तिं परां
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ १६॥

इत्यानन्दनाथपादपपद्मोपजीविना काश्यपगोत्रोत्पन्नेनान्ध्रेण
त्यागराजनाम्ना विरचितः श्रीराजराजेश्वरीस्तवः सम्पूर्णः ॥